॥ आरुणिकोपनिषत् ॥

॥ आरुणिकोपनिषत् ॥ 16

आरुणिकाख्योपनिषत्ख्यातसंन्यासिनोऽमलाः ।
यत्प्रबोधाद्यान्ति मुक्तिं तद्रामब्रह्म मे गतिः ॥

ॐ आप्यायन्त्विति शान्तिः ॥

ॐ आरुणिः प्राजापत्यः प्रजापतेर्लोकं जगाम । तं गत्वोवाच । केन भगवन्कर्माण्यशेषतो विसृजामीति । तं होवाच प्रजापतिस्तव पुत्रान्भ्रातृन्बन्ध्वादीञ्छिखां यज्ञोपवीतं यागं स्वाध्यायं भूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनोलोकतपोलोकसत्यलोकं चातलतलातलवितलसुतलरसातलमहातलपातालं ब्रह्माण्डं च विसृजेत् । दण्डमाच्छादनं चैव कौपीनं च परिग्रहेत् । शेषं विसृजेदिति ॥ १॥

गृहस्थो ब्रह्मचारी वा वानप्रस्थो वा उपवीतं भूमावप्सु वा विसृजेत् । लौकिकाग्नीनुदराग्नौ समारोपयेत् । गायत्रीं च स्ववाचाग्नौ समारोपयेत् । कुटीचरो ब्रह्मचारी कुटुंबं विसृजेत् । पात्रं विसृजेत् । पवित्रं विसृजेत् । दण्डाँलोकांश्च विसृजेदिति होवाच । अत उर्ध्वममन्त्रवदाचरेत् । ऊर्ध्वगमनं विसृजेत् । औषधवदशनमाचरेत् । त्रिसन्ध्यादौ स्नानमाचरेत् । सन्धिं समाधावात्मन्याचरेत् । सर्वेषु वेदेष्वारण्यकमावर्तयेदुपनिषदमावर्तयेदुपनिषदमावर्तय्एदिति ॥ २॥

खल्वहं ब्रह्मसूचनात्सूत्रं ब्रह्मसूत्रमहमेव विद्वान्त्रिवृत्सूत्रं त्यजेद्विद्वान्य एवं वेद संन्यस्तं मया संन्यस्तं मया संन्यस्तं मयेति त्रिरुक्त्वाभयं सर्वभूतेभ्यो मत्तः सर्वं प्रवर्तते । सखामागोपायोजः सखायोऽसीन्द्रस्य वज्रोऽसि वार्त्रघ्नः शर्म मे भव यत्पापं तन्निवारयेति । अनेन मन्त्रेण कृतं वाइणवं दण्डं कौपीनं परिग्रहेदौषधवदशनमाचरेदौषधवदशनं प्राश्नीयाद्यथालाभमश्नीयात् । ब्रह्मचर्यमहिंसा

चापरिग्रहं च सत्यं च यत्नेन हे रक्षत हे रक्षत हे रक्षत इति ॥ ३॥

अथातः परमहंसपरिव्राजकानामासनशयनादिकं भूमौ ब्रह्मचर्यं मृत्पात्रमलाम्बुपात्रं दारुपात्रं वा यतीनां कामक्रोधहर्षरोषलोभमोहदम्भदर्पेच्छासूयाममत्वाहङ्क् आरादीनपि परित्यजेत् । वर्षासु ध्रुवशीलोऽष्टौ मासानेकाकी यतिश्चरेत् द्वावेव वा विचरेद्द्वावेव वा विचरेदिति ॥ ३॥

स खल्वेवं यो विद्वान्सोपनयनादूर्ध्वमेतानि प्राग्वा त्यजेत् । पित्रं पुत्रमग्न्युपवीतं कर्म कलत्रं चान्यदपीह यतयो भिक्षार्थं ग्रामं प्रविशन्ति पाणिपात्रमुदरपात्रं वा । ॐ हि ॐ हि ॐ हीत्येतदुपनिषदं विन्यसेत् ॥

खल्वेतदुपनिषदं विद्वान्य एवं वेद पालाशं बैल्वमाश्वत्थमौदुम्बरं दण्डं मौञ्जीं मेखलां यज्ञोपवीतं च त्यक्त्वा शूरो य एवं वेद । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदमिति । एवं निर्वाणानुशासनं वेदानुशासनं वेदानुशासनमिति ॥ ५॥

ॐ आप्यायन्त्विवति शान्तिः ॥

इति सामवेदीयारुणिकोपनिषत्समाप्ता ॥